वक्ष्ये पूर्वोक्तमार्गात्तु तद्धोमस्य विशेषकम् ।
अन्तर्गृहस्य कोणे स्याद् (?) ऐशाने शालिपिष्टकैः ॥
मण्डलं कारयेदेकाशीतिकोष्ठैर्यथापुरम् ।
कुण्डं त्रिमेखलं कार्यं मण्डलेशानभागतः ॥ १२५ ॥
तत्र होमः प्रकर्तव्यः शास्त्रदृष्टेन वर्त्मना ।
ततो मण्डलसंस्थाभ्यो देवताभ्यो बलिं हरेत् ॥ १२६ ॥
घृतान्नं देयमीशाय पर्जन्यायाज्यसंयुतम् ।
ओदनं सात्त्वतं दद्याज्जयन्ताय निवेदयेत् ॥ १२७ ॥
ध्वजानपूपान् पिष्टेन कूर्मरूपं प्रकल्पितम् ।
पैष्टं कुलिशमिन्द्राय पञ्च रत्नानि चार्पयेत् ॥ १२८ ॥
धूम्रवर्णं वितानं च सक्तून् सूर्याय कल्पयेत् ।
सत्याय घृतगोधूममत्स्यान् दद्याद् भृशाय च ॥ १२९ ॥
शष्कुलीरन्तरिक्षाय सक्तून् दद्याच्च पावके ।
पूष्णे लाजाः प्रदातव्या वितथे च(र?)णकौदनम् ॥
गृहक्षताय मध्वन्नं यमाय पललौदनम् ।
गन्धर्वाय सुगन्धं च *भृ(शा?ङ्गा)य रणजिह्वकः?) ॥
मृगाय यावकं देयं पितृभ्यः कृसरांस्तथा ।
दौवारिके दन्तकाष्ठं पैष्टं कृष्णबलिं तथा ॥ १३२ ॥
क्षिपेदपूपं सुग्रीवे पुष्पदन्ते तु पायसम् ।
कमलं सकुशस्तम्बं वरुणाय समर्पयेत् ॥ १३३ ॥

---

* अत्रैव पूर्वभागे 'स्यात् पक्षिजिह्वा त्वथ भृङ्गराजे' (अध्या० ७ श्लो० ५१) इत्युक्तम् ।

अमुराय सुरा देया पैष्टं सौवर्णमेव च ।
घृतौदनं च शैोषाय यवाः स्युः पापसंज्ञके ॥ १३४ ॥
रोगाय मोदकान् स(र्पीन्? र्पिः) फणिने नागकेसरम् ।
भक्ष्यो मुख्याय दातव्यः फल्लाटाय ततः क्षिपेत् ॥ १३५ ॥
मुद्गौदनं ततः सोमे पायसं मधुमिश्रितम् ।
शालिपिष्टं त्वर्गलाय लोपिकामदितेः क्षिपेत् ॥ १३६ ॥
दित्यै तु पूरिकान् दद्यादित्येवं बाह्यतो बलिः ।
मण्डलान्तरसंस्थानामिदानीं बलिरुच्यते ॥ १३७ ॥
आपाय दापयेत् क्षीरमापवत्साय वै दधि ।
आर्ये पैक्कं[२] तथा मांसं दातव्यं बलिकर्मणि ॥ १३८ ॥
सावि(त्र्यै? त्रे) मोदकं दद्याद् मरिचं[३] सकुशौदनम् ।
सवित्रे गुडपूपांश्च देयं स्याद् घृतचन्दनम् ॥ १३९ ॥
विवस्वते प्रदातव्यं पायसं रक्तचन्दनम् ।
देवाधिपतये दद्यात् तालमिश्रं घृतौदनम्* ॥ १४० ॥
मित्राय सघृतं भक्तं रुद्राय (सुध? गुड)पायसम् ।
पृथ्वीधराय मांसानि सकूश्माण्डानि दापयेत् ॥ १४१ ॥
आज्यं च दधिसंयुक्तं ब्रह्मणे विनिवेदयेत् ।
शर्वस्कन्दाय चार्यम्णे जम्भके पिलिपिञ्जके ॥ १४२ ॥

---

१. 'शे' ख. पाठः. २. 'तत्त्वं त', ३. 'चिं' क. पाठः.

---

* इन्द्रानन्तरम् इन्द्रजयस्य, रुद्रानन्तरं रुद्रजयस्य च पूजा मातृकासु लुप्ता स्यात् । सैषा 'शुद्धान्नमेवेन्द्रजयाय शस्तम्', 'मांसं तथा रुद्रजये त्वपक्वम्' (क्रियापा० पट० २७. श्लो० २५) इति गुरुदेववचनादवगन्तव्या ।

तिलाक्षतं पञ्चगव्यं भक्ष्यं भोज्यं पृथग्विधम् ।
मांसौदनं सरुधिरं हरिद्रौदनमेव च ॥ १४३ ॥

ईशानदिशमाश्रित्य चरक्यै विनिवेदयेत् ।
आग्नेयीं दिशमाश्रित्य स्थितायै मांसखण्डकम् ॥ १४४ ॥

दध्योदनं सरुधिरं विदार्यै विनिवेदयेत् ।
पूतनायै च नैर्ऋत्यां पीतं रक्तं बलिं क्षिपेत् ॥ १४५ ॥

वायव्ये पापराक्षस्यै मत्स्यमांसं सुरासवम् ।
पायसं वा प्रदातव्यं तन्नाम्ना सर्वतः क्रमात् ॥ १४६ ॥

सर्वेषां काञ्चनं दद्याद् ब्रह्मणे गां पयस्विनीम् ।
राक्षसानां बलिं दद्यान्मधुमांसौदनान्वितम् ॥ १४७ ॥

एवं सम्पूजिता देवाः शान्तिं कुर्वन्ति ते सदा ।
विप्रांश्च पूजयेद् भक्त्या विदुषो गृहमागतान् ॥ १४८ ॥

इति वा(स्तो ? स्तू)पशमनं विरचय्य समाचरेत् ।
प्रासादभवनोद्यानप्रारम्भे च समापने ॥ १४९ ॥

परमैश्वर्यवृद्ध्यर्थं सर्वदोषोपशान्तये ।
विधाय वास्तुपूजां च गृहं सूत्रेण सर्वतः ॥ १५० ॥

पावमानेन सूक्तेन रक्षोघ्नेन च वेष्टयेत् ।
मङ्गलं तूर्यघोषेण कुर्याद् ब्राह्मणवाचकैः ॥ १५१ ॥

वृतं सद्म विशेद् राजा सुमुहूर्ते विशेषतः ।
ब्राह्मणोदीरितैर्मन्त्रैः शोभनैः शङ्खनिस्वनैः ॥ १५२ ॥

मङ्गलैस्तूर्यनादैश्च विशेद् वेश्म विशांपतिः ।
प्रासादे रुचिरोत्तुङ्गे सौवर्णकलशान्विते ॥ १५३ ॥

सुधाधवलिते रम्ये रचनापरिशोभिते ।
जालमार्गकृतोद्याने क्वापि सर्वप्रकाशके ॥ १५४ ॥

क्वापि सन्तमसोपेते मणिदीपप्रकाशिते ।
सौवर्णस्तम्भरुचिरे चन्दनस्तम्भगन्धिनि ॥ १५५ ॥

काचकुट्टिमरोचिष्णौ स्फटिकोज्ज्वलकुट्टिमे ।
स्फाटिकोपलविन्यासदर्पणाकारभित्तिके ॥ १५६ ॥

विचित्रचित्रसंयुक्तप्रमोदप्रदकुट्टिमे ।
चित्रवस्त्रसमाकीर्णवितानेनोपरञ्जिते ॥ १५७ ॥

यथासुखं विशेद् राजा राष्ट्रैश्वर्यसमन्वितः ॥ १५७½ ॥

इति शिल्परत्ने उत्तरभागे मनुष्यालयलक्षणं नाम
एकत्रिंशोऽध्यायः ॥

---

## अथ द्वात्रिंशोऽध्यायः ।

### अथ कूपप्रश्नः ।

मीनकर्किमृगान्त्यार्धवृषतौल्यलियोषितः ।
कुम्भश्च तोयदानि स्युर्ग्रहेषु शशिभार्गवौ ॥ १ ॥

तोयात्मकौ ज्ञजीवौ तु सतोयौ तोयराशिगौ ।
वितोयावन्यराशिस्थावथ शन्यर्कभूमिजाः ॥ २ ॥

राहुश्च जलराशिस्थाः स्वल्पतोया भवन्ति हि ।

जलवत्यजलेन गतेऽधस्ताज्जलमुपरि भवति विपरीते ।
जलवद्द्वयसंपाते प्रभूतमुदकं विनिर्देश्यम् ॥ ३ ॥

स्पृशति यदि वामभागे नैर्ऋतभागे विनिर्दिशेद् वारि ।
ऐशान्यामूर्ध्वाङ्गे शेषेषु स्पर्शतोऽनिलस्थाने ॥ ४ ॥

जलसंज्ञो राशिर्वा जलग्रहो वापि लग्नगतः ।
कूपविधौ चिन्त्यः स्यादार्द्रद्रव्यप्रसङ्गो वा ॥ ५ ॥
प्रश्नवचनादिवर्णे वर्गचतुर्थे(थ)वा स्वरे दीर्घे ।
भवति जलं न भवति तद्वर्गादौ चान्तिमे द्वितीये वा ॥ ६ ॥
राहुयुतश्चन्द्रश्चे(श्चर)लग्नस्थो भवेदम्बु ।
दशमगते वा भानौ पातालस्थो गुरुस्तथा तादृक् ॥ ७ ॥
लग्ने जलवति सेन्दौ प्रष्टरि जलराशिगे भवेदम्भः ।
पातालस्थे पाते पृच्छकचन्द्रौ सहस्थितौ तद्वत् ॥ ८ ॥
स्वोच्चगतौ भृगुविन्दू नीचगतैः प्रेक्षितौ पृथग् जलदौ ।
प्राग्गमने चण्डालो यद्यागच्छेत् तदाशु वेश्या वा ॥ ९ ॥
प्रमुषितको यदि वायात् कूपे वाच्यं जलं भूरि ।
आर्द्रद्रव्यं स्पृशति यदि वा वारि तत्संज्ञितं वा
तोयासन्नो भवति यदि वा तोयकार्योन्मुखो वा ।
प्रष्टा वाच्यः सलिलमचिरादस्ति निःसंशयेन
पृच्छाकाले सलिलमिति वा श्रूयते यत्र शब्दः ॥ १० ॥
अम्भःप्रश्ने सलिलनिलयं राशिमाश्रित्य चन्द्रो
लग्नं यातो भवति यदि वा केन्द्रगः शुक्लपक्षे ।
सौम्यैर्दृष्टः प्रचुरमुदकं पापदृष्टोऽल्पमम्भ-
श्चिन्त्यो युक्त्या सुमतिभिरतश्चन्द्रवद् भार्गवोऽपि ॥ ११ ॥
पातालराशियुक्ताद् ग्रहयोगाद् दर्शनाच्चापि ।
कूपाम्भोरसमाहुर्लग्ननवांशेशतुल्यं वा ॥ १२ ॥
कटुलवणतिक्तमिश्रा मधुराम्लौ + कषायमर्कादेः ।
प्रश्नवचनादिवर्णाद् रसभेदाः स्युस्तथा वाच्याः ॥ १३

अकचटतपयशवर्गाश्चन्द्राद्यर्कान्तरसतुल्याः ।
सास्थिनि देहे स्पर्शो नेष्टः शिष्टेषु पुष्टफलम्॥ १४ ॥
मांसाढ्ये पङ्कयुतं फाले पाषाणसंयुक्तम् ।
प्रष्टरि तोयगते चेत्तोयं सुलभं तथा दृषद् दृषगे ॥ १५ ॥
रुदिते क्षवथौ कासे निष्ठीवे नासिकास्रवे ॥ १६ ॥
शीतच्छायाप्रवेशे च जले दृष्टे श्रुतेऽथवा ।
जलमस्तीति वक्तव्यं पृष्टकाले दृषद्यपि ॥ १७½ ॥

इति शिल्परत्ने उत्तरभागे कूपप्रश्नविधानं नाम
द्वात्रिंशोऽध्यायः ॥

---

## अथ त्रयस्त्रिंशोऽध्यायः ।

### अथासनादिपरिच्छदलक्षणम् ।

चम्पकाम्रमधूकैर्वा पनसोदुम्बरादिभिः ।
पीठानि कारयेद् विद्वान् सिंहयोन्यन्वितानि वा ॥ १ ॥
गजयोन्यन्वितान्येवं ध्वजयोन्यन्वितानि वा ।
आयतं चतुरश्रं च समं तुर्यश्रमेव वा ॥ २ ॥
वृत्तं वा कच्छपाकारं कारयेत् पीठमुत्तमम् ।
चतुष्पादसमायुक्तं पृष्ठाधारयुतं तु वा ॥ ३ ॥
यथोचितोन्नतोपेतं श्लक्ष्णं दृष्टिमनोहरम् ।
फलकामयमेवं स्याद् वेत्रबन्धमथापि वा ॥ ४ ॥
एतत् पूतासनं देवकार्यादौ विहितं बुधैः ।
कार्पासपूरितं वृत्तं स्थूलं पट्टावकुण्ठितम् ॥ ५ ॥

हंसपिञ्छभृतं वापि सुखासनमितीरितम्।
छागचर्ममयं पीठमूर्णागर्भं सुविस्तृतम्॥ ६॥

नानावर्णविचित्रं तदासनं च सुखाभिधम्।
सितपट्टपिनद्धैश्च हंसपिञ्छैः सुपूरितम्॥ ७॥

स्वेद + + + + + + + + शय्यासनमुत्तमम्।
पञ्चभिः सप्तभिर्वापि नवभिर्लोहजैः पदैः॥ ८॥

लोहपट्टकृताधारैर्लोहजालकमूर्धभिः।
(छटिको ?) पट्टगर्भस्थकार्पासेन विनिर्मितम्॥ ९॥

लोहासनमिदं प्रोक्तमूर्ध्वतः कलितं दृढम्।
एकदारुकृतं श्लक्ष्णं दन्तिदन्तसुचित्रितम्॥ १०॥

नानावर्णविचित्राढ्यं पृष्ठे फलकसंयुतम्।
चतुष्पादकृताधारं सार्धहस्तविशालकम्॥ ११॥

प्रायेण सार्धत्रिकरदीर्घं तस्योर्ध्वतः पुनः।
तावन्मात्रायताद्युक्तमृदुशय्यासनादिकम्॥ १२॥

ईषत् समुन्नतं राज्ञां पृष्ठाधारासनं स्मृतम्।
रुचिरेण सुवर्णेन निर्मितं रत्नमण्डितम्॥ १३॥

अष्टाभिः स्फाटिकैः सिंहैः मूर्धभिः सुविधारितम्।
अधः काञ्चनविन्यस्तरत्नवेदित्रयान्वितम्॥ १४॥

आस्थानमण्डपे राज्ञां सिंहासनमिदं वरम्।

अथ व्यजनं—

चामरं तालवृन्तं च द्विविधं व्यजनं स्मृतम्॥ १५॥

मयूरपिञ्छसम्भूतं वृत्ताकारविचित्रितम् ।
तालवृन्तमिति ख्यातं ध्वजयोनिसमन्वितम् ॥ १६ ॥

चामरं चमरीपुच्छसम्भवं स्थूलमूलकम् ।
कृशाग्रं सुसितं स्निग्धं तयोर्दण्डं च कारयेत् ॥ १७ ॥

हेमजं रत्नखचितं वृत्तं सुस्पर्शमेव च ।
चन्द्रमण्डलसङ्काशं नानापट्टविनिर्मितम् ॥ १८ ॥

तालवृन्तविशेषं तद् व्यजनं समुदाहृतम् ।
तालपत्रसमुद्भूतमभ्रकालङ्कृतं तु वा ॥ १९ ॥

अथच्छत्रं —

चन्द्रमण्डलसङ्काशं पङ्कजाकारमेव वा ।
लम्बितानेकवरणनीप्रयुक्तमथापि वा ॥ २० ॥

सदण्डं मकुटोपेतं वंशसूत्रादिनिर्मितम् ।
नानाविधपटीच्छन्नं ध्वजयोनिसमन्वितम् ॥ २१ ॥

चित्रितं पट्टसूत्राद्यैश्छत्रमेवं समीरितम् ।
तालीपत्रकृतं वापि वंशदण्डं विशेषतः ॥ २२ ॥

मकुटेनान्वितं वापि वर्जितं वा सुशोभनम् ।
सितपट्टकृतं रत्नदण्डं पङ्कजसन्निभम् ॥ २३ ॥

सरत्नहेममकुटं मुक्तादामविभूषितम् ।
सितच्छत्रमिदं ख्यातं सार्वभौमोचितं स्मृतम् ॥ २४ ॥

प्रतिषिद्धवृक्षनिर्मितशयनासनसेविनां कुलविनाशः ।
व्याधिभयव्ययकलहा भवन्त्यनर्थाश्च नैकविधाः ॥ २५ ॥

(धू? पू)र्वच्छिन्नो (यदिवा) दारुरतद्वत् परीक्ष्य(मा? आ)रम्भे।
यद्यारोहेत् तस्मिन् *कुमारादिकावस्त्रपशुदः सन्(?)॥ २६॥
(सितकुसुम)मत्तवारणदध्यक्षतपूर्णकुम्भरत्नानि।
मङ्गल्यान्यन्यानि च दृष्ट्वारम्भे शुभं ज्ञेयम्॥ २७॥
कर्माङ्गुलं यवाष्टकमुदरासक्तं तुषैः परित्यक्तम्।
अङ्गुलशतं नृपाणां महती शय्या जयाय कृता॥ २८॥
नवतिः सैव षडूना द्वादशहीना त्रिषट्कहीना च।
नृपपुत्रमन्त्रिबलपतिपुरोधसां स्युर्यथासङ्ख्यम्॥ २९॥
अर्धमतोऽष्टांशोनं विष्कम्भो विश्वकर्मणा प्रोक्तः।
आयामत्र्यंशसमः पा(दो)च्छ्रायः सकुक्षिशिराः॥ ३०॥
यः सर्वः श्रीपर्ण्या पर्यङ्को निर्मितः स धनदाता।
असनकृतो रोगहरस्तिन्दुकसारेण वित्तकरः॥ ३१॥
यः केवलशिंशपया विनिर्मितो बहुविधं स वृद्धिकरः।
चन्दनमयो रिपुघ्नो धर्मयशोदीर्घजीवितकृत्॥ ३२॥
पद्मकपर्यङ्कः श्रियमायुर्दीर्घं श्रुतं शुभं वित्तम्।
कुरुते सालेन कृतः कल्याणं शाकरचितश्च॥ ३३॥
अन्येन समायुक्ता न तिन्दुकिः शिंशपा (च) शुभफलदा।
न श्रीपर्णी नच देवदारुवृक्षो नचाप्यसनः॥ ३४॥
शुभदौ तु सालशाकौ परस्परं संयुतौ पृथक्त्वे च।
तद्वत् पृथक् प्रशस्तौ सहितौ च हरिद्रककदम्बौ॥ ३५॥
फलतरुणा शयनासनमिष्टफलं भवति सर्वेषाम्।
गजदन्तः सर्वेषां प्रोक्ततरूणां प्रशस्यते योगा(त्)॥ ३६॥

---

* 'कुमारकः पुत्रपशुदः सः' इति पाठः स्यात्।

कार्योऽलङ्कारविधिर्गजदन्तेन प्रशस्तेन ।
दन्तस्य मूलपरिधिं त्वायामात् प्रोज्झ्य कल्पयेच्छेषम् ॥
अधिक(मग्रो ?)मनूपचराणां न्यूनं किञ्चिद् गिरीन्द्रचाराणाम् ।
ईषायोगे दारु प्रदक्षिणाग्रं प्रशस्तमाचार्यैः ॥ ३८ ॥
अपसव्यैकदिगग्रे भवति भयं भूतसंजनितम् ।
पादे कुम्भाधश्चेद् ग्रन्थिस्तस्मिन् सुदारुणो रोगः ॥ ३९ ॥
कुम्भाधस्ताज्जङ्घा तत्र कृतो जङ्घयोः करोति भयम् ।
तस्याश्चा(धो ? धा) रोऽधः क्षयकृद् द्रव्यस्य तत्र कृतः ॥
खुरदेशे यो ग्रन्थिः खुरिणां पीडाकरः स निर्दिष्टः ।
ईषाशीर्षण्योश्च त्रिभागसंस्थो भवेन्न शुभः ॥ ४१ ॥
निष्कुटमथ कोलाक्षं सूकरनयनं च वत्सनाभं च ।
कालकमन्यद् वृद्धकमिति कथिताश्छिद्रसङ्क्षेपाः ॥ ४२ ॥
*पादपसुषिरं मध्ये सङ्कटमास्ये च निष्कुटच्छिद्रम् ।
निष्पावमाषमात्रं नीलं छिद्रं च कोलाक्षम् ॥ ४३ ॥
सूकरनयनं विषमं विवर्णमध्यं§ द्विपर्वदीर्घं च ।
वामावर्तं भिन्नं पर्वयुतं वत्सनाभाख्यम् ॥ ४४ ॥
कालकसंज्ञं कृष्णं वृद्धकमिति यद् भवेद् विनिर्भिन्नम् ।
दा(रौ पर्य ? रुसवर्ण) छिद्रं न तथा पा(ङ्गं ? पं) समुद्दिष्टम् ॥
निष्कुटके द्रव्यस्य क्षयमथ कोलक्षणे कुलध्वंसः ।
शस्त्रभयं सूकरके रोगभयं वत्सना(भाख्ये ॥ ४६ ॥
कालकवृद्धकसंज्ञं कीटैर्विद्धं च न शुभदं छिद्रम् ।
सर्वं ग्रन्थिप्रचुरं सर्वत्र न शोभनं दारु ॥ ४७ ॥

---

* 'घटवत् सुषिरम्' इति, § 'अध्यर्धपर्वदीर्घं च' इति च बृहत्संहिता ।

एकद्रुमेण धन्यं वृक्षद्वयनिर्मितं च धन्यतरम् ।
त्रिभि)रात्मजवृद्धिकरं चतुर्भिरर्थो यथाश्वाग्र्यम् ॥ ४८ ॥

पञ्चवनस्पतिरचिते पञ्चत्वं याति तत्र यः शेते ।
षट्सप्ताष्टतरूणां काष्ठैर्घटिते कुलविनाशः ॥ ४९ ॥

भूमयो ब्राह्मणादीनां यथोक्ता वास्तुकर्मणि ।
ता एव तेषां शस्यन्ते देवतायतनेष्वपि ॥ ५० ॥

अथ वाहनम्—

डोला सुखासनं तद्वद् रथो नौः प्लवकस्तथा ।
वाहानि पञ्च ज्ञेयानि नराणां कृत्रिमाणि वै ॥ ५१ ॥

सुवक्रया वेणुजया हेमरत्ननिबद्धया ।
स्वर्णशृङ्खलया पट्टन्यस्तशय्योपधानया ॥ ५२ ॥
दिव्यपट्टप्रच्छदया वाहकद्वयवाह्यया ।
एकदण्डिकया नद्धं डोलायानं तदुच्यते ॥ ५३ ॥
दन्तिदन्तकृतं हेमरत्नजालविभूषितम् ।
शार्दूलचर्मसंनद्धं दण्डकद्वयधारितम् ॥ ५४ ॥
चतुर्भिर्वाहकैर्वाह्यं हंसशय्यासमन्वितम् ।
पृष्ठाधारेण संयुक्तं सुखासनमिति स्मृतम् ॥ ५५ ॥
वक्ष्यमाणक्रमं चोक्तलक्षणाकारलक्षितम् ।
निर्मितं दन्तिदन्ताद्यैर्नानावर्णविचित्रितम् ॥ ५६ ॥
हेमरत्नसमाकीर्णं मृदुशय्यास्तृतान्वितम् ।
डोलोक्तमार्गसंबद्धदण्डया च समन्वितम् ॥ ५७ ॥
तद्दण्डमध्यसंलम्बहस्ताधारसमन्वितम् ।
यानं यत्तु तदेव स्याड्डोलाभेदमिति स्मृतम् ॥ ५८ ॥

लोहजं दण्डकं मध्यं कृतं दार्वादिभिः पुनः ।
मूलाग्रवाहसुभगं श्रृङ्खलापट्टिकान्वितम् ॥ ५९ ॥
लोहडोलमिदं तत्तु यानं मानुषसम्मितम् ।
अश्वैश्चतुर्भिर्द्वाभ्यां वा युक्तश्च युगलान्वितैः ॥ ६० ॥
विस्तारादातताधिक्यः सर्वचित्रसमन्वितः ।
मुखे पृष्ठे यथान्यायं मकराननलक्षितः ॥ ६१ ॥
नानावर्णपताकाभिर्भ्राजितः सुदृढा(त्म ? क्ष)कः ।
स्यन्दनोऽयं नृपाणां वै निर्मितो वाहनोत्तमः ॥ ६२ ॥
डोलादण्डायतं तत्र कारयेद् योनिभेदतः ।
अष्टाङ्गुलोनषड्ढस्तं रविहस्तौ प्रशेरते (?) ॥ ६३ ॥
सप्तहस्तं तथाप्यष्टमात्रोनदशहस्तकम् ।
पञ्चहस्तं तथाप्यष्टमात्रान्वितदिगक्षरम् ॥ ६४ ॥
एवं षोढोत्तमं मध्यं सप्तधा कीर्तयाम्यहम् ।
साष्टमात्राष्टहस्तं चाप्येकादशकरं तथा ॥ ६५ ॥
साष्टाङ्गुलं (च) षड्ढस्तं नवहस्तं तथैव च ।
साष्टार्काङ्गुलहस्तं च पर्ववद्यो ++++॥ ६६ ॥
अष्टाङ्गुलोनाष्टकरं त्रयोदशकरं पुनः ।

अथ नौः —

लाकुचैः फलकैः क्लृप्ता चोपवल्कलवेष्टिता ॥ ६७ ॥
आयता सुदृढा नीरे सा नौर्याने प्रशस्यते ।
वेणुकर्म्राभि(?)रन्योन्यं गुम्फितो वर्तुलाकृतिः ॥ ६८ ॥

---

१. 'र्मा' ख. पाठः.

पिनद्धश्चर्मणा बाह्ये प्लवकोऽयं जलेचरः ।
एकवृक्षभवा वा स्यान्नानाकारसमन्विता ॥ ६९ ॥
नौका *नद्धीचिका धान्या (?) महती सागरोचिता ।
नानाप्रमाणफलका बहुबद्धा यथादृढम् ॥ ७० ॥
सर्वेषामायतत्र्यंशादधिकं नैव विस्तृतिः ।
उत्सेधं च तथायामसमं वा पटपादके ॥ ७१ ॥
नौतारात्रिगुणं प्रोक्तं सर्वत्र पटविस्तृतम् ।
एकत्रिपञ्चसप्त स्युः पटपादा यथोचितम् ॥ ७२ ॥
कर्णधारादिसंयुक्तं कार्यं नौवाहनं स्मृतम् ।
उत्तमं ध्वजजं यानं मध्ये सिंहगजान्विते ॥ ७३ ॥
वृषयोनिसमायाममधमं वाहनं स्मृतम् ।

अथ शयनसाधनम् —

(निषिद्ध ? )हंसपिच्छमयी काचिच्छाल्मलेस्तूलजा परा ॥
कार्पासरचिता चान्या केसरैरितरा कृता ।
एता वस्त्रदुकूलादिकल्पिताः सुविचित्रिताः ॥ ७५ ॥
पल्लवैः कल्पिता काचित् काचित् कुसुमनिर्मिता ।
शीताम्भःपूरिता छागचर्मणा रचिता परा ॥ ७६ ॥
ताः सर्वाः स्वायसंपन्ना दशतालायतान्विताः ।
नवतालान्विताः कार्या अष्टतालान्विताश्च वा ॥ ७७ ॥
स्वायामार्धत्रिपादादिविस्तीर्णाः प्रायशः स्विताम् (?) ।

अथ खट्वा —

दन्ताङ्घ्रिर्लोहचरणः साष्टापदपदस्तथा ॥ ७८ ॥

---

* 'नध्रीचिता धन्या' इत्येवञ्जातीयः पाठः. स्यात्

अचलश्च चलश्चैव वेत्रकः पट्टिकामयः ।
डोलाख्यश्चेति कथिता शय्या विद्वद्भिरष्टधा ॥ ७९ ॥
द्विपद(न्त)कृतैः पादैश्चतुर्भिरुपशोभितः ।
दन्ताङ्घ्रिर्नाम मञ्चोऽयं सर्व(मञ्च ? दन्त)मयः शुभः ॥
ताम्रारकूटघटितैश्चरणैस्तन्मयैः शुभैः ।
लोहमञ्चकनामायं सुदृढः परिकीर्तितः ॥ ८१ ॥
चारुचामीकरानद्धो रचनापरिरञ्जितः ।
अष्टापदमयः प्रोक्तो मञ्चकोऽयं चतुष्पदः ॥ ८२ ॥
यन्त्रयन्त्रीकृतैर्नादैरानन्दं तनुते नदन् ।
अचलोऽयं समाख्यातो रतिकेलिसुखावहः ॥ ८३ ॥
उपवेशनमात्रेण गच्छत्यूर्ध्वमधश्च यः ।
दृढाङ्घ्रिश्चारुरूपश्च चलमञ्चः प्रकीर्तितः ॥ ८४ ॥
त्वग्भिर्वेत्रस्य बाह्याभिस्तनुभिर्गुम्फितो घनम् ।
आयामतिर्यक्कर्णाभिर्यथादृष्टिमनोहरम् ॥ ८५ ॥
स्पर्शे मन्दरवाढ्यश्च वेत्रमञ्चः प्रकीर्तितः ।
कार्पासगुणक्लृप्ताभिः सुपट्टाभिः सुगुम्फितः ॥ ८६ ॥
दीर्घाभिश्चित्रवर्णाभिर्मञ्चोऽयं पट्टिकाभिधः ।
श्रीकण्ठदारुघटितो नदत्काञ्चनभूषितः ॥ ८७ ॥
फलकामंस्तु[1](?)तन्त्रीव्रफलकाचित्रसंयुतः ।
सौवर्णशृङ्खलाबद्धो लम्बमानः स डोलकः ॥ ८८ ॥
मञ्चानामायतं तारं शय्यावत् कारयेद् बुधः ।
आधारमुपधानस्य मञ्चतारसमायतम् ॥ ८९ ॥

१. 'मयस्तु' क. पाठः.

तदर्धं वा त्रिपादं वा तुङ्गं तत्सममेव वा ।
फलकं जालकं वाथ कारयेदग्रमूलयोः ॥ ९० ॥
शिरोपधानं पादोपधानं कार्यं यथाशुभम् ।
शय्यातारसमायामं तदर्धविपुलान्वितम् ॥ ९१ ॥
तूलादिपूरितं प्राग्वच्चतुष्कोणसमन्वितम् ।
वृत्ताकारं तु वा कुर्यान्नानावर्णविचित्रितम् ॥ ९२ ॥

अथ पादुकम्—

लघुदारुकृतं चारु सुस्निग्धं पादसंयुतम् ।
तत्तत्पादतलायामविस्तारं सुलघुक्रियम् ॥ ९३ ॥
लघुच्छत्रकृताधारं पादसौख्यप्रदं परम् ।
नात्युच्छ्रितं नातिनीचं कारयेत् पादुकद्वयम् ॥ ९४ ॥
छागत्वचाथ वा कार्यं नानाचित्रविचित्रितम् ।
शुभयोन्यादिसंयुक्तं स्वर्णरत्नविभूषितम् ॥ ९५ ॥
एतेषामपि वस्तूनां हस्तैर्वाङ्गुलकैर्यवैः ।
यथासम्भवमायादि परिध्यादिषु कारयेत् ॥ ९६ ॥

अथ कुडुबादिमानसाधनम्—

वृत्तं वा चतुरश्रं वा धान्यादेर्मानसाधनम् ।
एकाङ्गुलमितं तारं दीर्घं घातं च तत्समम् ॥ ९७ ॥
यत्तद् घनाङ्गुलं प्रोक्तं तेनाहुस्तस्य लक्षणम् ।
सार्धत्रयोदशामितं यत्र जातं घनाङ्गुलम् ॥ ९८ ॥
कुडुबोऽयं समुद्दिष्टः चतुष्पञ्चाशदङ्गुलः ।
घनरूपं यत्र दृष्टं प्रस्थः स्याद् द्विशतोत्तरम् ॥ ९९ ॥

यत्र षोडशकं जातं घनसंज्ञकमङ्गुलम् ।
आढकोऽयं समाख्यातः सर्वधान्यादिमापने ॥ १०० ॥

चतुःषष्टियुतं यस्मिन् घनमष्टशताङ्गुलम् ।
द्रोणोऽयमयुतादूर्ध्वं त्रिसाहस्रघनाङ्गुलम् ॥ १०१ ॥

शतानामष्टकयुतं चतुर्विंशत्समन्वितम् ।
खारीति विदिता तज्ज्ञैः सर्वे वै दारुलोहजाः ॥ १०२ ॥

यथा तेषां बहिर्भागे शुभायादिसमुद्भवः ।
तथा भित्तेर्घनं कुर्यात् सङ्क्रमीथं च लोहजम् ॥ १०३ ॥

ऊर्ध्वभागे तु तन्मध्ये तदाधाराय लोहजम् ।
पादं च पत्रचित्राढ्यं भित्तिबाह्ये सशृङ्खलम् ॥ १०४ ॥

दण्डं सुवर्तुलं लौहं कार्यं धान्यापसारकम् ।
तुर्यश्रे व्यासगुणितमायामगतमात्रकम् ॥ १०५ ॥

तद्घाताङ्गुलनिघ्नं यत् तत् दन्तर्घनाङ्गुलम् ।
वृत्ते व्यासार्धगुणितं नाह्यार्धं घाततािडतम् ॥ १०६ ॥

अथोलूखलादि—

हस्तमात्रससुत्सेधं वर्तुलं लघुमध्यमम् ।
आयामार्धं त्रिपादं वा तारं तत्त्र्यंशमानतः ॥ १०७ ॥

गर्तस्य घातं तारं च शैलं वा वार्क्षमेव वा ।
उलूखलाङ्घ्रिनिस्त्वेवं कारयेत् सुदृढं यथा ॥ १०८ ॥

सारदारुकृतान्येव मुसलानि भवन्ति हि ।
पञ्चाङ्गुलोनद्विकरायायतानि दृढानि च ॥ १०९ ॥

आयामषोडशांशादिविष्कम्भान्यग्रमूलयोः ।
कृष्णलोहैर्मुखं कुर्यात् सर्वधान्यक्षतक्षमम् ॥ ११० ॥
यावद्भिर्मुसलैरिष्टमवघातं नरैरिह ।
तावद्भिरेव कार्यं स्यादथवा यन्त्रसंस्थितैः ॥ १११ ॥
मुसलैर्बहुभिश्चेत्तत् कार्यमेकेन तद्विदा ।

अथ तुला —

दशार्धगुञ्जं प्रवदन्ति माषं
माषाह्वयैः षोडशभिश्च कर्षः ।
कर्षैश्चतुर्भिश्च पलं तुला त-
च्छतं सुवर्णस्य सुवर्णसंज्ञम् ॥ ११२ ॥

अथ तैलद्रोणिः —

धाराद्यर्थं रोगिणां वैद्यकर्म-
ण्येवं खट्वां कारयेच्छिल्पिवर्यैः ।
वृक्षैर्वातघ्नोदितैराम्रदार्वा-
द्यैस्तद्युक्त्या मानुषाणां हिताय ॥ ११३ ॥

खट्वा रुद्रवितस्तिदीर्घमहिता तुर्यांशविस्तारिता
(सा न चरद्भित्तिकां धर्मतला ?)स्निग्धोपधानाग्रतः ।
मूले मात्रमितोक्तनालसुषिरा मूले तथाप्यग्रके
भास्वत्तद्विगुणाङ्गुलोच्चचरणद्वन्द्वान्विता स्याद् दृढम्
[॥ ११४ ॥

अथ जलयन्त्रम् —

निर्माय शकटद्वन्द्वं तयोर्दूरस्थयोः पुनः ॥ ११५ ॥

पट्टिकाभिर्नेमिबाह्ये परितः परिवेष्टयेत् ।
तिर्यग्गताभिः सुदृढं सान्तरं वृषयोनिकम् ॥ ११६ ॥
तद् यन्त्रं चतुरश्राभं दण्डप्रोतस्वनाभिकम् ।
सुवृत्तं तद्दण्डिकाग्रद्वयं तु भ्रमणक्षमम् ॥ ११७ ॥
जलाशयोपरि यथा तथा स्तम्भेषु योजयेत् ।
पाशे बद्ध्वा त(सः?तः)पात्रं प्रक्षिपेत् तज्जलाशये ॥
तत्पाशाग्रं यन्त्रपृष्ठे वेष्टयित्वा वृतिद्वयम् ।
आकृष्योद्धरणं कार्यं जलस्य लघु यत्नतः ॥ ११९ ॥
अथवा जलपात्राणि वेणुनालकृतानि वै ।
बहूनि पाशे सम्बध्य मालाकारं निरन्तरम् ॥ १२० ॥
मुखे पृष्ठं परस्यास्य मुखेऽन्यस्य यथा तथा ।
यन्त्रपृष्ठे क्षिपेन्मालां जलपात्रमयीमिमाम् ॥ १२१ ॥
भ्रामयेद् यन्त्रमथ तत्तीरगैर्वा महावृषैः ।
तद्दण्डिकास्थसुमहद्यन्त्रान्तरगतैर्नरैः ॥ १२२ ॥
पात्राणि तोयमादाय गत्वोर्ध्वं यन्त्रपृष्ठतः ।
प्रक्षिप्य गच्छन्ति पुनस्तद्भ्रमक्रममानतः ॥ १२३ ॥
तुलायन्त्रेण वा तोयोद्धारणं तत्तु कथ्यते ।
कूपाद्यगाधमानेन दशभागकृते पुनः ॥ १२४ ॥
तदष्टांशोन्नतं पादद्वन्द्वं तीरेऽब्धिभागतः ।
दूरे संस्थाप्य पादाग्रे दण्डं भ्रमरिकान्वितम् ॥ १२५ ॥
बद्ध्वा भ्रमरिकायां तु तुलादण्डं च योजयेत् ।
पादतुल्यसमायामं भ्रमरादूर्ध्वगं पुनः ॥ १२६ ॥

भ्रमराधोगतं (?) युक्त्या कृत्वास्मिन् भारवाहकम्।
द्व्यंशायतं चलं बद्ध्वा भारं तन्मूलतः क्षिपेत् ॥ १२७ ॥
दण्डाग्रे क्षेपणीं बद्ध्वा पाशैर्वंशाग्रजां दृढाम्।
भाण्डं च क्षेपणीमूले योजयेच्चलबन्धतः ॥ १२८ ॥
जलाशयोपरिगतः सङ्क्रमीथस्थितो नरः।
गृहीत्वा क्षेपणीं दोर्भ्यामाकृष्य जलमुद्धरेत् ॥ १२९ ॥

अथेक्षुयन्त्रं —

षडङ्गुलविष्कम्भं वा पादोनद्विकरायतम्।
सुवृत्तमार्जवयुतं सुस्निग्धं सारदारुजम् ॥ १३० ॥
तदग्रेऽर्काङ्गुलायामं शिरःकाष्ठं दशाङ्गुलम्।
विष्कम्भमुभयोः कार्यं तन्नाहेऽथाष्टधा कृते ॥ १३१ ॥
एकैकांशैश्चतुर्दिक्षु कारयेच्चतुरर्गलम्।
अर्गलद्वयमध्यस्थान्यन्तरालान्यथान्यकैः ॥ १३२ ॥
वृत्तपृष्ठान्यर्गलानि काष्ठोष्ठोच्चाय(मका ? ता)नि च।[1]
अन्तरालानि निम्नानि द्विद्विमात्रप्रमाणतः ॥ १३३ ॥
एवं स्तम्भयुगं कृत्वा संस्थाप्योलूखलावटे।
अन्तरालेऽर्गलं कृत्वा मेलयित्वा निरन्ध्रकम् ॥ १३४ ॥
शिरःकाष्ठादधः कार्यं स्तम्भं तत्रगपट्टिका।
यन्त्रस्तम्भद्वयप्रोता विश्लेषभयशङ्कया ॥ १३५ ॥
तयोरन्यतरस्योर्ध्वशिखासम्बन्धयष्टिगैः।
वृषैः स्तम्भमयेत् स्तम्भं तदन्यस्त्वन्यथा तदा ॥ १३६ ॥

---

१. 'ष्ठोय' ख. पाठः.

करोति भ्रमणं तस्मात् तन्मध्यन्यस्तमैक्षवम् ।
खण्डं संपीड्य निस्सारं पतत्यन्यत्र तत्क्षणात् ॥ १३७ ॥

**अथ नाडीयन्त्रं —**

शुद्धताम्रादिक्लृप्तं यत् कपालं वर्तुलाकृति ।
सर्वतस्तुल्यघनमप्यत्यन्तं लघु तस्य तु ॥ १३८ ॥
मध्ये सूच्यग्रवेधेन कृत्वा सुषिरमल्पकम् ।
कारयेद् घटिकायन्त्रं कालज्ञानाय सर्वतः ॥ १३९ ॥
गालितं जलमादाय महद् भाण्डं प्रपूरयेत् ।
घटिकायन्त्रमादाय तज्जलोपरि विन्यसेत् ॥ १४० ॥
सुषिरेणागतजलैस्तत्पूरणनिमज्जनात् ।
कालो विज्ञायते सम्यक् तत्परीक्षणमुच्यते ॥ १४१ ॥
खमध्यगेऽश्विनीपूर्वतारेष्वन्यतमे बुधः ।
न्यस्य यन्त्रं यथान्यायं विनिद्रः प्रतिपालयेत् ॥ १४२ ॥
यावत् परेऽह्नि तत्तारं खमध्यमधिगच्छति ।
तत्र यन्त्रस्य संजातं षष्ट्यावृत्तिनिमज्जनम् ॥ १४३ ॥
तर्हि सूक्ष्मं भवेद् यन्त्रं नो चेत् सूक्ष्मत्वमाचरेत् ।
अथवा सुषिरीभूतं काचपात्रद्वयं मिथः ॥ १४४ ॥
सुसूक्ष्मवालुकापूर्णं सम्यक् संयोज्य तेन वा ।
नाडीपरीक्षणं युक्त्या कार्यं तत्[1]सिकतास्रवात् ॥ १४५ ॥
ऊर्ध्वपात्रस्थसिकतं निरवशेषमधःस्थिते ।
पात्रे पतनकालं यत् तन्नाडीति निगद्यते[2] ॥ १४६ ॥

---

१. 'व' क. पाठः. २. 'ते अथ स्वर्ण' ख. पाठः.

अङ्गुलं + + + काभिर्घटिकावलयं तथा(?) ।
आवर्तनं च निर्माय बद्ध्वान्योन्यं यथाविधि ॥ १४७ ॥

जलैर्वालुकभाराद्यैर्भ्रामयेद् यन्त्रयन्त्रितम्

अथ स्वर्णकीलं—

स्वर्णकीलस्य वक्ष्यामि लक्षणं वर्णसिद्धये ॥ १४८ ॥

पञ्चवर्णादिपादोनरुद्रवर्णावसानकम् ।
पादवर्णविवृद्ध्या तत्कीलं स्याद् द्वादशद्वयम् ॥ १४९ ॥

आदौ द्वादशकीलानां बहिर्भागे तु लाञ्छनम् ।
अन्तर्भागे तदन्यानामिति पूर्वैरुदाहृतम् ॥ १५० ॥

छेदपञ्चकमाद्यस्य वृत्तत्रयमतःपरम् ।
आवर्तद्वयमन्यस्य वृत्तमेकं परस्य तु ॥ १५१ ॥

अन्ये छेदचतुष्कं तु वृत्तोर्ध्वविपदं परे ।
केवलं हंसपादोऽन्ये हंसपादोपरिस्थितम् ॥ १५२ ॥

छेदश्छेदत्रयं[1] पश्चात् कर्णरेखा ततः परम् ।
छेदद्वयं तथा पश्चादेकच्छेदस्तथैव च ॥ १५३ ॥

अथोर्ध्वद्वादशस्याद्ये कर्णरेखाद्वयं विदुः ।
एकैव + तथा कर्णरेखान्यस्य तथा पुनः ॥ १५४ ॥

हंसपादं तथान्यस्य पञ्चच्छेदं परस्य तु ।
चतुष्कं छेदरेखानां त्रिकं च द्विकमेककम् ॥ १५५ ॥

दशवर्णस्य कीलस्य नोक्तं किमपि लाञ्छनम् ।
वृत्तत्रयं द्विवृत्तं च वृत्तमेकमतःपरम् ॥ १५६ ॥

---

१. 'च्छे' क. पाठः.

एवं सुवर्णकीलानामिदं पूर्वोक्तलक्षणम् ।

अत्रानुक्तं शारिकापञ्जराद्यं
भूषापेटीवस्त्रभाण्डादिकं च ।
हस्तैर्मात्रैर्वा यवैर्नाहविस्ता-
रायामाढ्यं कारयेद् युक्तियुक्तम् ॥ १५७½ ॥

इति शिल्परत्ने उत्तरभागे आसनादिलक्षणं नाम
त्रयस्त्रिंशोऽध्यायः ॥

---

अथ चतुस्त्रिंशोऽध्यायः ।

अथ कर्मकारवेतनाक्रमः ।

व्रीहीणां वाथ शालीनां प्रस्थषट्कं यदेव सा ।
प्रायेण तक्षकादीनां दृश्यते नित्यवेतना ॥ १ ॥

एतद् द्विगुणितं दद्यात स्थपतेस्तद्विसङ्गुणम् ।
गुरोरिति महद् वाक्यमस्ति शास्त्रेति शुश्रुमः ॥ २ ॥

अथ दारुखण्डिज्ञानं —

दारूणां मूल्यविज्ञाने तदायामस्य मध्यतः ।
त्वचं सारेतरं सर्वं त्यक्त्वा नाहं परिग्रहेत् ॥ ३ ॥

तन्नाहाङ्गुलिवेदांशे स्वघ्ने दार्वायतैः करैः ।
सङ्गुण्य वेदमनुभिः संहृता पादखण्डिका ॥ ४ ॥

तच्चतुष्कं पूर्णखण्डी तद्द्वारा मूल्यमादिशेत् ।
समभूगतवृक्षस्यच्छायामानकरं पुनः ॥ ५ ॥

त्रयोदशहतं स्वस्यच्छायापदयुगाहृतम् ।
तरुदीर्घकरं ज्ञेयं नाहं मूलप्रदेशतः ॥ ६ ॥

गृहीत्वा तत्त्रिभागोनशेषं नाहं प्रकल्पयेत् ।
एवं स्थितस्य[1] वृक्षस्य खण्डिज्ञानं विधीयते ॥ ७ ॥

अथ क्रकचं —

क्रकचैर्बहुधा दारौ दारिते सुमहामतिः ।
पृथक् तत्खण्डविस्तारं मात्वा मात्रैः पृथक् पृथक् ॥ ८ ॥
क्रकचस्पृष्टपार्श्वेषु तत्तदायामभे[2]ध्यतः ।
तदङ्गुलार्धे गुणयेदायामकरमानतः ॥ ९ ॥
हृत्वा तस्माद् द्वादशभिस्तत्फलं क्रकचं स्मृतम् ।
क्रकचानां समं प्रस्थशालिकं कथ्यवेतना (?) ॥ १० ॥
तद्दशांशं स्थपतये दत्त्वा शेषं परिग्रहेत् ।
वृक्षाणां छेदने तेषां दारणे तक्षणादिषु ॥ ११ ॥
तत्काठिन्यमृदुत्वादिवशान्न्यूनं तथाधिकम् ।
कल्पयेद् वेतना यस्तु तत्तत्कर्मकृ[3]तांस्तथा (?) ॥ १२ ॥
दशांशकं स्थपतये देयमष्टांशकं तु वा ।

अथ शिलायाः —

शिला कीलचतुष्के[4]ण यावत्करमितायता ॥ १३ ॥
दारिता वेतना तस्या व्रीहिप्रस्थं न संशयः ।
दारणद्विगुणं तक्षणे सुश्लक्ष्णीकरणे पुनः ॥ १४ ॥
तस्माद् द्विगुणमेवं स्याद् यावच्छायात्र दृश्यते ।
पूर्वस्माद् द्विगुणा पश्चाद् वेतना शिल्पकारिणाम् ॥ १५ ॥

---

१. 'र', २. 'मुद्धृतः' ख. पाठः. ३. 'तं तथा' क. ग. पाठः. ४. 'ष्को' ख. पाठः.

अन्योन्यमेलने तक्षणस्तुल्या प्रायेण कल्पिता ।

अथ बिम्बादौ —

यावदङ्गुलमुत्सेधं शिलादार्वादिकल्पिते ॥ १६ ॥

बिम्बे तावत् पणः प्रोक्तस्तदर्धं वात्र चित्रके ।
हस्तायामवितानाढ्यफलकादौ विचक्षणैः ॥ १७ ॥

पणपञ्चकमाख्याता वेतना चित्रलेखने ।

अथ लोहानां —

प्रायशः स्वर्णकारस्य वेतनं१ कदशांशकम् ॥ १८ ॥

भूषादिकरणे किञ्चिन्न्यूनं वाप्यधिकं क्वचित् ।
द्राविते तापिते लोहकूटेनाभिहतेऽपि वा ॥ १९ ॥

पूर्वप्रमाण(मो ? तो) हानिर्न स्वर्णस्य मनागपि ।
हस्यते रजते हानिर्दशांशादिक्रमेण तु ॥ २० ॥

शुद्धताम्रे न हानिः स्यात् सीसे नागेऽथ पैत्तले ।
कृष्णलोहे च पञ्चांशं कांस्ये हानिर्दशांशतः ॥ २१ ॥

एतेषां कर्मकर्तॄणां तत्तद्द्रव्यदशांशकम्२ ।
प्रायेण वेतनं प्रोक्तं [illegible] लोके स्मृतम् ॥ २२ ॥

लोहदारुदृषत्तन्तुमृत्तिकादिकृतामिह ।
कुटुम्बपोषणापूर्णा पूर्णा वा स्याद् द्विवेतना३ ॥ २३ ॥

इति शिल्परत्ने उत्तरभागे वेतनाक्रमविधिर्नाम
चतुस्त्रिंशोऽध्यायः ॥

---

१. 'दो' क. पाठः. २. 'तद्दशां' ख. पाठः. ३. 'द्विवे' क. पाठः.

## अथ पञ्चत्रिंशोऽध्यायः ।

### अथ शस्त्रलक्षणम् ।

शस्त्रप्रश्नः पूर्वपक्षे पृच्छकस्याशुभाय च ।
शुभवारे तथा वामभागगे पृच्छकेऽपि वा ॥ १ ॥
शुभाय दक्षिणे कृष्णपक्षे पापवारके(?) ।
यत्र दूतः समायाति तद्गतश्चेत् तदा मरुत् ॥ २ ॥
तच्छस्त्रमिष्टफलदमन्यथानिष्टदं वदेत् ।
दूते मरुति दक्षस्थे शुभमन्यत्र मध्यमम् ॥ ३ ॥
दूरादाहूय वा मार्गे यात्रासमयतोऽथवा ।
प्राभृतेन विना मौनमानसो यदि पृच्छति ॥ ४ ॥
तत्कार्यमशुभं विद्धि तत्र शस्त्रे विशेषतः ।
स्नानभूषादिसंयुक्तो मृष्टाशी हृष्टमानसः ॥ ५ ॥
पृच्छको वा स्वयं वा चेच्छुभं स्यादन्यथाशुभम् ।
नागवल्लीदलं पूगं पुष्पमुर्वारुकादिकम् ॥ ६ ॥
केरवृक्षफलं चेक्षुविकारं कदलीफलम् ।
गोरसानि च मुख्यानि प्राभृतानि विशेषतः ॥ ७ ॥
भिन्ने जीर्णे नीरसे वा प्राभृतेऽप्यशुभं वदेत् ।
कुट्टिमोपरि विन्यस्य पादमेकं परं भुवि
पृच्छेदशुभदं विद्यादूर्ध्वमालोक्य चेत् तथा ।
कक्षे विन्यस्य पृच्छा चेत् पृष्ट्वा पृष्ठाद्गतोऽथवा ॥ ९ ॥
तस्कराद्यैः क्षतं ब्रूहि शुभं वक्षसि लक्षणम् ।
सच्छिद्रमायुधं विद्यान्नवद्वारगते करे ॥ १० ॥

छिद्रमग्रे ह्यधद्वारस्पर्शनेऽन्यत्र चेदधः ।
अङ्गसन्धौ करं न्यस्येच्छस्त्रे संधानमुच्यताम् ॥ ११ ॥
पृच्छकश्चलपादश्चेदाशु गच्छति तत्करात् ।
कृपाणे निश्चलीभूते हिंसादौ न प्रशस्यते ॥ १२ ॥
भूमौ कृपाणं विन्यस्य पृष्टे निष्फलतां वदेत् ।
मध्ये गृहीत्वा चेदेवं शस्त्रमालोक्य चेच्छुभम् ॥ १३ ॥
निम्नभूमिगते दूते स्वस्मादुच्चमजातितः ।
औन्नत्यभूमिगे नीचात् स्वीकृतासीति कथ्यताम् ॥ १४ ॥
तत्पूर्वेऽह्नि यथा स्वस्य सुखदुःखाशनादिकम् ।
तथास्य स्वीकृतिदिने सम्यगूह्य विनिर्दिशेत् ॥ १५ ॥
कण्ठादूर्ध्वाङ्गसंस्पर्शे ब्रह्मवंशं कृपाणकम् ।
तदधः स्तनयोरूर्ध्वे क्षत्रवंशं न संशयः ॥ १६ ॥
स्तनादधः कटेरूर्ध्वे वैश्यवंशमिहा[2]युधम् ।
कट्यधः शूद्रवंशं स्यादिति निश्चित्य निर्दिशेत् ॥ १७ ॥
तत्कालोदयराशिर्वा दूतगो वा तदायुधम् ।
दृश्यते यत्र तद्राशिर्न्यस्तराशिरथापि वा ॥ १८ ॥
स्थिरश्चेच्छुभदं ब्रूयात् तदन्यौ मध्यमौ स्मृतौ ।
मेषत्रिकोणाद् विप्राद्या जातिभेदा भवन्ति हि ॥ १९ ॥
अनामिकाङ्गुलस्याद्यद्वितीयपर्वायतम् (?) ।
दक्षिणस्य करस्याहुर्मिलित्वा मानसाधनम् ॥ २० ॥

---

१. 'स्पृ' घ. पाठः. २. 'होदितम् ।' क. पाठः.

मात्वा मूलाग्रमायामं दशभिर्गुणयेत् पुनः ।
आयमर्कहृताच्छेषं नवभिरथ वर्धयेत् ॥ २१ ॥
चतुर्दशहृतं शेषं व्ययं शस्त्रस्य निश्चयः ।
त्रिघ्ने अष्टहृताच्छेषं योनिः स्यान्नवभिः पुनः ॥ २२ ॥
हत्वा त्रिपञ्चकैर्हत्वा शेषेण तिथिमानयेत् ।
कृत्वा दशगुणं सप्तविंशत्या तारमानयेत् ॥ २३ ॥
हत्वा चतुर्भिर्वारः स्याच्छैलाहरणशेषतः ।
आयाधिक्यं व्ययाद् भद्रमथ योन्यष्टकस्य तु ॥ २४ ॥
ध्वजमार्जारपञ्चास्यश्ववृषाखुशशाः क्रमात् ।
योनयस्तेषु शुभदास्तार्क्ष्यसिंहश्वगोवृषाः ॥ २५ ॥
अथवा ध्वजधूमादीन् कल्पयेद् यदि कथ्यते ।
अर्थलाभश्च कलहो विजयं रोगमेव च ॥ २६ ॥
लाभं दुःखं शुभं तद्वन्निष्फलं च क्रमात् फलम् ।
करणे सिंहशार्दूलौ पशुवृष्टिगजाः शुभाः ॥ २७ ॥
स्थिरविष्टिखराः शस्त्रे करणेषु विनिन्दिताः ।
स्वाङ्गक्षतिस्तु गण्डान्ते शुभवारः प्रशस्यते ॥ २८ ॥
स्वस्य स्ववंशजं शस्त्रं मुख्यमाहुर्मनीषिणः ।
व्ययायौ योनिनक्षत्रतिथिवारान् समूह्य तु ॥ २९ ॥
यज्ज्ञातं तत्तदायुस्तत् पञ्चधा विभजेत् पुनः ।
बाल्यकौमारकादीनि शेषादानीय तद् वदेत् ॥ ३० ॥

१. 'सिंहमा' क. पाठः. २. 'खरगजाः क्र', ३. 'गजाः' ब. पाठः. ४. 'ल्प्यते य' ख. पाठः.

मरणं मरणं दद्याद् बालो वृद्धो न विक्रमी ।
कुमारयौवनौ युद्धदुर्मदौ हेतिलक्षणे ॥ ३१ ॥

आयुःसङ्ख्यां त्रिभिर्भक्त्वा निःशेषेऽन्धत्वमादिशेत् ।
एकशेषे एकचक्षुर्द्विचक्षुः स्याद् द्विशेषतः ॥ ३२ ॥

हत्वायुर्वेदसङ्ख्याभिस्तच्छेषैर्वा कुलं नृपात् ।
आयुधर्क्षमृगैरस्य जन्मादिमृगमित्रताम् ॥ ३३ ॥

शत्रुत्वमपि विज्ञाय वदेदिष्टमनिष्टदम् ।
ताम्बूलं द्विगुणीकृत्य त्वेकयुक्तं पुनस्तथा ॥ ३४ ॥

पञ्चघ्नं द्वादशहतं कृत्वा शेषं विलग्नकम् ।
सप्तविंशहृताच्छेषं नक्षत्रमिति वा वदेत् ॥ ३५ ॥

शुभे वार्केऽथवारूढे शुभं पापेऽशुभं वदेत् ।

एवं परीक्ष्य बहुधायुधलक्षणानि
तत्पृच्छकस्य शुभदाशुभदं हि वाच्यम् ।
कुन्तादिचापमुसलादिषु मौनवर्जं
सञ्चिन्तयेदखिलमन्यदिहोक्तरीत्या ॥ ३६ ॥

अथ धनुर्लक्षणं —

पुष्पवत् पुङ्खमादाय शत्रुवत् पीड्यते धनुः ॥ ३७ ॥
मुष्टिना लक्ष्यमाच्छाद्य श्वासेन सह मोचयेत् ।

अध्यायैरथ सप्तपञ्चकयुतैः श्रीदेवनारायण-
प्रज्ञाकल्पितशिल्परत्नगतपश्चाद्भागमन्तं गतम् ।

---

१. 'वृ', २. 'न्मर्क्षमृ', ३. 'नामव' ख. पाठः. ४. 'त्या ॥ अध्या' क. ख. ग. पाठः.

नानालक्षणमन्त्रलिङ्गमनुबिम्बाकारभूषायुध-
ब्रह्माश्मासनतत्प्रतिष्ठितिभवं जीर्णोद्धराद्यन्वितम् ॥
करुणापूरसम्पन्नगुरूणां सुप्रसादतः।
अहं सिद्धरसोऽस्म्यज्ञस्तत्पादेभ्यो नमोनमः ॥ ३९ ॥

इति शिल्परत्ने उत्तरभागे शस्त्रलक्षणविधानं नाम
पञ्चत्रिंशोऽध्यायः ॥

शिल्परत्नोत्तरभागः समाप्तः ॥

---

शुभं भूयात्।

# LIST OF SANSKRIT PUBLICATIONS FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी **Bhaktimanjari** (Stuti) by H. H. Svāti Śrī Rāma Varma Mahārāja. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः **Syanandurapuravarnana-prabandha** (Kāvya) by H. H. Svāti Śrī Rāma Varma Mahārāja, with the commentary Sundarī of Rājarāja Varma Koil Tampuran. | 2 | 0 | 0 |

---

## Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् **Daiva** (Vyākaraṇa) by Deva with Puruṣakāra of Kṛṣṇalīlāśukamuni (*out of stock*). | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्त्तिस्तवौ **Abhinavakaustubhamala and Dakshinamurtistava** by Kṛṣṇalīlāśukamuni (*out of stock*). | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः **Nalabhyudaya** (Kāvya) by Vāmana Bhaṭṭa Bāṇa (*second edition*). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः **Sivalilarnava** (Kāvya) by Nīlakaṇṭha Dīkṣita (*out of stock*). | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः **Vyaktiviveka** (Alankāra) by Mahima-Bhaṭṭa with commentary (*out of stock*). | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः **Durghatavrtti** (Vyākaraṇa) by Śaraṇadeva (*out of stock*), | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका **Brahmatattvaprakasika** (Vedānta) by Sadāśivendrasarasvatī (*out of stock*). | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् **Pradyumnabhyudaya** (Nāṭaka) by Ravi Varma Bhūpa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 9—**विरूपाक्षपञ्चाशिका Virupakshapanchasika** (Vedanta) by Virūpākṣanātha with the commentary of Vidyāçakravartin (*out of stock*). | 0 | 8 | 0 |
| No. 10—**मातङ्गलीला Matangalila** (Gajalakṣaṇa) by Nīlakaṇṭha (*out of stock*). | 0 | 8 | 0 |
| No. 11—**तपतीसंवरणम् Tapatisamvarana** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 4 | 0 |
| No. 12—**परमार्थसारम् Paramarthasara** (Vedānta) by Ādiśeṣa with the commentary of Rāghavānanda (*out of stock*). | 0 | 8 | 0 |
| No. 13—**सुभद्राधनञ्जयम् Subhadradhananjaya** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 0 | 0 |
| No. 14—**नीतिसारः Nitisara** (Nīti) by Kāmandaka, with the commentary of Śankarārya (*out of stock*). | 3 | 8 | 0 |
| No. 15—**स्वप्नवासवदत्तम् Svapnavasavadatta** (Nātaka) by Bhāsa (*second edition*) | 1 | 8 | 0 |
| No. 16—**प्रतिज्ञायौगन्धरायणम् Pratijnayaugandharayana** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 17—**पञ्चरात्रम् Pancharatra** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |
| No. 18—**नारायणीयम् Narayaniya** (Stuti) by Nārāyaṇa Bhaṭṭa with the commentary of Deśamangalavārya (*out of stock*). | 4 | 0 | 0 |
| No. 19—**मानमेयोदयः Manameyodaya** (Mīmāmsā) by Nārāyaṇa Bhaṭṭa and Nārāyaṇa Paṇḍita (*out of stock*). | 1 | 4 | 0 |
| No. 20—**अविमारकम् Avimaraka** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 21—**बालचरितम् Balacharita** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि **Madhyamavyayoga-Dutavakya-Dutaghatotkacha-Karnabhara and Urubhanga** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः **Nanartharnavasamkshepa** (Kośa) by Keśavasvāmin (Part I, 1st and 2nd Kāṇḍas). (*out of stock*). | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः **Janakiparinaya** (Kāvya) by Cakra Kavi (*out of stock*). | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका **Kanadasiddhantachandrika** (Nyaya) by Gangādharasūri (*out of stock*). | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् **Abhishekanataka** by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part I, 1st and 2nd Sargas) (*out of stock*). | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः **Vaikhanasadharmaprasna** (Dharmasūtra) by Vikhanas (*out of stock*). | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः **Nanartharnavasamkshepa** (Kośa) by Keśavasvāmin (Part II, 3rd Kāṇḍa) (*out of stock*). | 2 | 4 | 0 |
| No. 30—वास्तुविद्या **Vastuvidya** (Śilpa) (*out of stock*). | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः **Nanartharnavasamkshepa** (Kośa) by Keśavasvāmin (Part III, 4th, 5th and 6th Kāṇḍas). | 1 | 0 | 0 |
| No. 32—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part II, 3rd, 4th and 5th Sargas) (*out of stock*). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 33—वाररुचसंग्रहः **Vararuchasamgraha** (Vyākaraṇa) with the commentary Dīpaprabhā of Nārāyaṇa (*out of stock*). | 0 | 8 | 0 |
| No. 34—मणिदर्पणः **Manidarpana** (Nyāya) by Rājaçūḍāmaṇimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः **Manisara** (Nyāya) by Gopīnātha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāsikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part III, 6th, 7th and 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् **Asauchashtaka** (Smṛti) by Vararuci with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part I, 1st Kāṇḍa). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् **Charudatta** (Nāṭaka) by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् **Alankarasutra** by Rājānaka Ruyyaka with the Alankārasarvasva of Mankhuka and its commentary by Samudrabandha (*second edition*). | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् **Adhyatmapatala** (Vedānta) by Āpastamba with Vivaraṇa of Śrī Sankara-Bhagavat-Pāda (*out of stock*). | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् **Pratimanataka** by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghaṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part II, 2nd Kanda, 1-6 vargas). | 2 | 8 | 0 |
| No. 44—तन्त्रशुद्धम् **Tantrasuddha** by Bhaṭṭāraka Vedottama. | 0 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 45—**प्रपञ्चहृदयम् Prapanchahridaya.** | 1 | 0 | 0 |
| No. 46—**परिभाषावृत्तिः Paribhashavritti** (Vyākaraṇa) by Nīlakaṇṭha Dīkṣita. | 0 | 8 | 0 |
| No. 47—**सिद्धान्तसिद्धाञ्जनम् Sidhantasiddhanjana** (Vedānta) by Kṛṣṇānanda Sarasvatī (Part I.) | 1 | 12 | 0 |
| No. 48—**सिद्धान्तसिद्धाञ्जनम् Do.** Do. (Part II). | 2 | 0 | 0 |
| No. 49—**गोलदीपिका Goladipika** (Jyotiṣa) by Parameśvara. | 0 | 4 | 0 |
| No. 50—**रसार्णवसुधाकरः Rasarnavasudhakara** (Alankâra) by Singa Bhūpāla. | 3 | 0 | 0 |
| No. 51—**नामलिङ्गानुशासनम् Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghāṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghatīya Sarvānanda (Part III, 2nd Kanda, 7-10 vargas). | 2 | 0 | 0 |
| No. 52—**नामलिङ्गानुशासनम् Namalinganusasana** (Kośa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghatîya Sarvânanda (Part IV, 3rd Kâṇḍa). | 1 | 8 | 0 |
| No. 53—**शाब्दनिर्णयः Sabdanirnaya** (Vedânta) by Prakâśâtmayatîndra. | 0 | 12 | 0 |
| No. 54—**स्फोटसिद्धिन्यायविचारः Sphotasiddhinyayavichara** (Vyâkaraṇa). | 0 | 4 | 0 |
| No. 55—**मत्तविलासप्रहसनम् Mattavilasaprahasana** (Nâtaka) by Mahendravikramavarman. | 0 | 8 | 0 |
| No. 56—**मनुष्यालयचन्द्रिका Manushyalayachandrika** (Silpa) (*out of stock*). | 0 | 8 | 0 |
| No. 57—**रघुवीरचरितम् Raghuviracharita** (Kâvya). | 1 | 4 | 0 |
| No. 58—**सिद्धान्तसिद्धाञ्जनम् Siddhantasiddhanjana** (Vedânta) by Kṛsnânanda Sarasvatî (Part III). | 2 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 59—नागानन्दम् **Nagananda** (Nâṭaka) by Harṣadeva with the commentary Vimarśinî of Śivarâma (*out of stock*). | 3 | 4 | 0 |
| No. 60—लघुस्तुतिः **Laghustuti** by Laghubhattâraka with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 61—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedânta) by Kṛṣnânanda Sarasvatī (Part IV). | 1 | 4 | 0 |
| No. 62—सर्वमतसंग्रहः **Sarvamatasamgraha.** | 0 | 8 | 0 |
| No 63—किरातार्जुनीयम् **Kiratarjuniya** (Kâvya) by Bhāravi with the commentary Sabdârthadîpikā of Citrabhânu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No. 64—मेघसन्देशः **Meghasandesa** by Kâlidāsa with the commentary Pradīpa of Dakṣiṇâvartanātha. | 0 | 12 | 0 |
| No. 65—मयमतम् **Mayamata** (Śilpa) by Mayamuni (*out of stock*). | 3 | 4 | 0 |
| No. 66—महार्थमञ्जरी **Maharthamanjari** (Darśana) with the commentary Parimala of Maheśvarânanda. | 2 | 4 | 0 |
| No. 67—तन्त्रसमुच्चयः **Tantrasamuchchaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Śankara (Part I, 1–6 Patalas) (*out of stock*). | 3 | 4 | 0 |
| No. 68—तत्त्वप्रकाशः **Tattvaprakasa** (Āgama) by Śrī Bhojadeva with the commentary Tâtparyadîpikâ of Śrī Kumāra | 1 | 12 | 0 |
| No. 69—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Isânaśiva gurudevamiśra (Part I, Sâmānyapâda) | 1 | 8 | 0 |
| No. 70—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part I). | 2 | 8 | 0 |
| No. 71—तन्त्रसमुच्चयः **Tantrasamuchchaya**(Tantra) by Nârâyaṇa with the commentary Vimarśinī of Śaṅkara(Part II, 7—12 Patalas) (*out of stock*). | 3 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 72—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Iśānaśivagurudevamiśra (Part II, Mantrapāda). | 4 | 0 | 0 |
| No. 73—ईश्वरप्रतिपत्तिप्रकाशः **Isvarapratipattiprakasa** (Vedānta) by Madhusūdanasarasvatī. | 0 | 4 | 0 |
| No. 74—याज्ञवल्क्यस्मृतिः **Yajnavalkyasmrti** with the commentary Bâlakrîḍâ of Viśvarûpâcârya. (Part I — Âcâra and Vyavahâra Adhyâyas). | 3 | 4 | 0 |
| No. 75—शिल्परत्नम् **Silparatna** (Śilpa) by Śrīkumâra (Part I). | 2 | 12 | 0 |
| No. 76—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part II). | 3 | 0 | 0 |
| No. 77—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Iśānasivagurudevamiśra (Part III, Kriyāpāda 1—30 Patalas). | 3 | 0 | 0 |
| No. 78—आश्वलायनगृह्यसूत्रम् **Asvalayanagrhyasutra** with the commentary Anāvilā of Haradattācārya. | 2 | 6 | 0 |
| No. 79—अर्थशास्त्रम् **Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Ganapati Sāstri (Part I—1 & 2 Adhikaraṇas). | 3 | 12 | 0 |
| No. 80—अर्थशास्त्रम् **Do.** Do. (Part II—3—7 Adhikaranas). | 4 | 0 | 0 |
| No. 81—याज्ञवल्क्यस्मृतिः **Yajnavalkyasmrti** with the commentary Bâlakrīḍa of Viśvarūpācārya (Part II. Prâyascittâdhyâya). | 2 | 0 | 0 |
| No. 82—अर्थशास्त्रम् **Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Ganapati Sastri (Part III, 8—15 Adhikaraṇas). | 3 | 4 | 0 |
| No. 83—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part IV, Kriyāpāda 31-64 Patalas and Yogapāda). | 3 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 84—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimula-kalpa** (Part III). | 2 | 0 | 0 |
| No. 85—विष्णुसंहिता **Visnusamhita** (Tantra). | 2 | 8 | 0 |
| No. 86—भरतचरितम् **Bharatacarita** (Kâvya). by Kṛṣṇakavi. | 1 | 8 | 0 |
| No. 87—सङ्गीतसमयसारः **Sangitasamayasara** (Sangīta) of Sangītâkara Pârśva-deva. | 1 | 2 | 0 |
| No. 88—काव्यप्रकाशः **Kavyaprakasa** (Alankâra) of Mammaṭabhaṭṭa with two commentaries the Sampradāyaprakāśinī of Śrī Vidyācakravartin and the Sâhityacûdâmaṇi of Bhaṭṭagopâla (Part I, 1–5 Ullâsas). | 3 | 0 | 0 |
| No. 89—स्फोटसिद्धिः **Sphotasiddhi** (Vyākaraṇa) by Bharatamiśra. | 0 | 8 | 0 |
| No. 90—मीमांसाश्लोकवार्त्तिकम् **Mimamsasloka-vartika** with the commentary Kāśikā of Sucaritamiśra (Part I). | 2 | 8 | 0 |
| No. 91—होराशास्त्रम् **Horasastra** of Varāhamihirācārya with the Vivaraṇa of Rudra. | 3 | 0 | 0 |
| No. 92—रसोपनिषत् **Rasopanishat.** | 2 | 0 | 0 |
| No. 93—वेदान्तपरिभाषा **Vedantaparibhasha** (Vedānta) of Dharmarājādhvarīndra with the commentary Prakāśika of Peddādīkṣita. | 1 | 8 | 0 |
| No. 94—बृहद्देशी **Brihaddesi** (Sangita) of Matangamuni. | 1 | 8 | 0 |
| No. 95—रणदीपिका **Ranadipika** (Jyotiṣa) of Kumaraganaka. | 0 | 4 | 0 |
| No. 96—ऋक्संहिता **Rksamhita** with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhavārya (Part I, 1st Adhyāya in 1st Aṣṭaka). | 1 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 97—**नारदीयमनुसंहिता Naradiyamanusamhita** (Smṛti) with Bhāsya of Bhavasvāmin. | 2 | 0 | 0 |
| No. 98—**शिल्परत्नम् Silparatna** (Silpa) by Śrī-kumāra. | 2 | 8 | 0 |

***Apply to:—***

*The Curator*

*for the publication of Sanskrit Manuscripts,*

*Trivandrum.*

## IN THE PRESS.

1. Mīmāmsāślokavārtika with Kāśikāṭīkā of Sucaritamiśra (Part II).
2. Kāvyaprakāśa (Alaṅkāra) with the commentary Sampradāyaprakāśinī of Śrī Vidyācakravartin and the Sāhityacūḍāmaṇi of Bhaṭṭagōpāla (Part II).
3. Prakriyāsarvasva (Vyākaraṇa) of Śrī Nārāyaṇabhaṭṭatiri with commentary.
4. Āryabhaṭīya with the Bhāṣya of Nīlakaṇṭhasomasutvan.
5. Ṛksamhitā with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhava (Part II).
6. Haramekhala (Vaidyaka) of Māhuka with commentary.
7. Dattila (Bharata) of Dattila.
8. Hamsasandeśa (Vedānta) with commentary.
9. Bālamārtāṇḍavijaya (Nāṭaka) of Devarāja.
10. Sāhityamīmāmsā.
11. Sāmbapañcāśikā (Stuti) with commentary.
12. Arthaśāstra of Kauṭalya with commentary in Malayalam.

---

## UNDERTAKEN FOR PUBLICATION.

1. Āśvalāyanagṛhyasūtra with Devasvāmin's Bhāṣya.
2. Pramāṇalakṣaṇa (Mīmāmsā) of Sarvajñātmapāda.
3. Nyāyasārapadapañcikā of Vāsudeva.
4. Sarasvatīkaṇṭhābharaṇa (Vyākaraṇa) of Bhōja with Vṛtti of Nārāyaṇa Daṇḍanātha.
5. Śiśupālavadha with the commentary of Dēvarāja.
6. Sangrāmavijayodaya.
7. Śukasandeśa with the commentaries of Dharmagupta-Gaurīdāsa and Kerala Varmadeva.
8. Pāṇinīyalaghuvivṛti.
9. Vākyapadīya with Prakīrṇakaprakāśa of Helārāja.
10. Uttaranaiṣadhacarita.

---